**किं वा** । कथंभूतं वज्रजापम् ? **सौख्योपायं** सहजसौख्ययुक्तिम् । पुनः कथंभूतम् ? **पवन-**[१]**गगनस्थैर्यहेतुं** वाय्वाकाशस्थैर्यकारणम् । कुतः ? **समन्तात्** सर्वत्र । कस्मात् ? **अनुगमात्** अनुप्राप्तितः । कस्य ? **सन्मन्त्रस्य** । कथंभूतस्य ? **त्र्यक्षरस्य** ॐकारादेः । कया ? **अर्थगत्या** अर्थावगत्या । कथम् ? **स्फुटं** व्यक्तम् । कस्मात् ? **विवेकात्** विचारात् । केषाम् ? **नासारन्ध्रद्वयगतमरुन्मण्डलानां** नासिकापुटद्वयप्राप्तवाय्वादिपञ्चमण्डलानाम् ॥ ३८ ॥

**वायुर्यस्मात् प्रवहति चतुःषष्टिपत्रात्मकेऽस्मिन्**
**निर्माणाब्जे शशिरविपथेनोद्गमाद् घ्राणरन्ध्रे ।**
**पीतश्वेतारुणहरितकश्यामवर्णक्रमेण**
**क्षोण्यम्भोऽग्नीरणगगनतः पञ्चधा मण्डलेन ॥ ३९ ॥**

**प्रवहति** प्रचलति । कः ? **वायुः** । कस्मिन् ? **अस्मिन् निर्माणाब्जे** नाभिकमले । कथंभूते ? **चतुःषष्टिपत्रात्मके** । कस्मात् ? **यस्मात्** त्यागग्रहणात् । केन ? **शशिरविपथेन** आदित्यचन्द्रमार्गेण । कस्मात् ? **उद्गमात्** उद्भवात् । कस्मिन् ? **घ्राणरन्ध्रे** नासापुटे । केन ? **मण्डलेन** । **पञ्चधा** पञ्चप्रकारेण । कुतः ? **क्षोण्यम्भोग्नीरणगगनतः** अवनिजलाग्निवाता-काशात् । केन ? **पीतश्वेतारुणहरितकश्यामवर्णक्रमेण** ॥ ३९ ॥

**स्पृष्ट्वाधस्ताद् वहति धरणी वामपार्श्वे च तोयं**
**वह्निः सव्ये ह्युपरि पवनो व्योम मध्यप्रवेशम् ।**
**आरभ्यार्काङ्गुलमिह तत्तोऽनुक्रमात् षोडशान्तं**
**वृद्ध्या बाह्ये प्रविशति पुनर्गुह्यपद्मं च यावत् ॥ ४० ॥**

**वहति** व्रजति । का ? **धरणी** पृथ्वी । किं कृत्वा ? **स्पृष्ट्वा** संस्पृश्य । किम् ? **अधस्ताद्** अधोभागम् । वहति च । किम् ? **तोयं** पानीयम्। कस्मिन् ? **वामपार्श्वे** वामभागे। वहति च । कः ? **वह्निः** । किं कृत्वा ? स्पृष्ट्वा । किम् ? **सव्यं** दक्षिणभागम् । वहति । कः ? **पवनो** वायुः । क्व ? **उपरि** । कथं हि । वहति च । किम् ? **व्योम** गगनम् । किं कृत्वा स्पृष्द्वा। कम् ? **मध्यप्रदेशं** मध्यभागम् । किं कृत्वा ? **आरभ्य** । किम् ? **अर्काङ्गुलं**

---

१. गमन- ख.

द्वादशाङ्गुलम् । क्व ? **इह** देहे शरीरे। कथंभूतम् ? **षोडशान्तम्**। कुतः ? **अनुक्रमात्** ततः । कस्मिन् ? **बाह्ये** बहिः । कया ? **वृद्ध्या** बर्धितेन । **प्रविशति** । कथम् ? **पुनः** । किम् ? **गुह्यपद्मं** तलचक्रम् । कथम् ? **यावदवधि** । कथं च ॥ ४० ॥

**संहारेण क्षितिरिह पुरा दक्षिणे घ्राणरन्ध्रे**
**सृष्ट्या वामे गगनमुभयोर्वाहयोः संक्रमेण ।**
**षट्पञ्चाशत्पवनवहनं कालनाड्याः सपादं**
**श्वासैरष्टादशशतगतैः संक्रमः पञ्चदण्डैः ॥ ४१ ॥**

भवति। का ? **क्षितिः** पृथ्वी। कस्मिन् ? **घ्राणरन्ध्रे** । **दक्षिणे**। कथम् ? **पुरा** पूर्वम् क्व ? **इह** संक्रान्तौ। केन ? **संहारेण** प्रलयेन। भवति । कस्मिन् ? घ्राणरन्ध्रे **वामे** । कया **सृष्ट्या** उत्पत्या । भवति । किम् ? **गगनम**ाकाशम् ? कयोः ? **वाहयोः उभयोः** वाम-दक्षिणयोः । भवति । किम् ? **पवनवहनं** वायुगमनम् । कति ? **षट्पञ्चाशत्** । कथंभूतम् **सपादं** चतु[र्थांश]युक्तम् । कस्याः ? **कालनाड्याः** मध्यमायाः । भवति । कः ? **संक्रम** संक्रमणम् । कैः ? **पञ्चदण्डैः** । कैः ? **श्वासैः** । कथंभूतैः ? **अष्टादशशतगतैः** ॥ ४१ ॥

**इत्थं च द्वादशभिरभितः[१] संक्रमैः षष्टिदण्डैः**
**प्राणो याति द्वययुतमधिकैः षट्शतैर्दिक्शतैश्च ।**
**सन्ध्यानाड्योर्यदिह गदिताः कालभोगाश्चतस्रो**
**नोक्षास्तासां व्यवहृतिपथेऽतीव दुर्लक्षितत्वात् ॥ ४२ ।**

**याति** गच्छति । कः ? **प्राणः** प्राणवायुः। कैः ? **षष्टिदण्डैः** । कैः ? **संक्रमै** संक्रान्तिभिः । कतिभिः ? **द्वादशभिः** । कुतः ? **अभितः** सर्वतः । कथम् ? **इत्थम**मुना प्रकारेण । कथं च ? पुनः कथंभूतैः ? **दिक्शतैः** दशशतैः । कथंभूतैः ? **अधिकैः** । कैः **षट्शतैः** । कथम् ? **द्वययुतम्** अयुतद्वयम् । सन्ति । **गदिताः** उक्ताः। काः ? **सन्ध्यानाड्यः** कथंभूताः ? **कालभोगाः** राह्वाक्रान्ताः । कथं च । क्व ? **इह** देहे । कथम् ? **यत्** यस्मा कारणात् । कति ? **चतस्रः** चतुःप्रमाणाः । पुनः कथंभूताः नाड्यः ? **नोक्षा** नोक्ताः ।

---

१. रभिमतः – ख.

कथिताः । कस्मिन्? **व्यवहृतिपथे** व्यवहारमार्गे । कस्मात् ? **अतीवदुर्लक्षितत्वात्** द्रष्टुमशक्यत्वात् । कासाम् ? **तासां** नाडीनाम् ॥ ४२ ॥

**षट्पञ्चाशज्जलपलमथो वा सपादं च कृत्वा**
**दण्डेनाहर्निशमिह चतुःषष्टि दण्डा विधेयाः ।**
**षड्भिः श्वासैर्जलपलमिदं षष्टिभिर्यत्र दण्ड-**
**स्तं त्यक्त्वा संव्यवहृतिकृते वायुवाहो नियोज्यः ॥ ४३ ॥**

भवन्ति। के ? **चतुःषष्टि दण्डाः**। कथंभूताः ? **विधेयाः** कर्त्तव्याः। केन ? **दण्डेन**। किम् ? **अहर्निशं** रात्रिन्दिवम् । क्व ? **इह** ज्योतिर्ग्रन्थे[१] । किं कृत्वा ? **कृत्वा** संस्कृत्य ? किम् ? **जलपलं** पानीयपलम् । कति ? **षट्पञ्चाशत्** । कथंभूतम् ? **सपादं वा** । कथं च । कथम् ? **अथो** अनन्तरम् । भवति । कः ? **वायुवाहः** पवनवहनम् । कथंभूतः ? **नियोज्यः** योजनीयः। कस्मिन् ? **व्यवहृतिकृते** व्यवहारकरणे[२]। किं कृत्वा ? **त्यक्त्वा** परिहृत्य। कम् ? **तं** दण्डम् । भवति । किम् **इदं जलपलं** पानीयपलम् । कैः ? **श्वासैः**। कतिभिः ? **षड्भिः**। भवति । कः ? **दण्डः** । कतिभिः ? **षष्टिभिः** पानीयपलैः । कुत्र ? **यत्र** ॥ ४३ ॥

**वातेनेत्थं विवृतमखिलं देहिनां देहयन्त्रं**
**नानाकृत्यं भजति सुखदं दुःखदं कर्मयोगाद् ।**
**जीवत्यस्मिन् निवसति तनौ निर्गमान्मृत्युरेति**
**त्यक्त्वा तस्मादनिलमपरो देहतो नास्ति कर्ता ॥ ४४ ॥**

**भजति** करोति। किम् ? **देहयन्त्रम्**। किम् ? **नानाकृत्यं** नानाकरणम् । कथंभूतम् ? **सुखदम्** । न केवलं सुखदं **दुःखदं** च । कस्मात् ? **कर्मयोगात्** शुभाशुभकर्ममिलनात् । पुनः कथंभूतं देहयन्त्रम् ? **विवृतम्** आवृत्तम् । केन ? **वातेन** वायुना । कथंभूतम् ? **अखिलं** समस्तम्। कथम् ? **इत्थं** अमुना प्रकारेण। **जीवति**। कः ? **देही** प्राणी। क्व सति ? **निवसति** निवासं कुर्वति सति। कस्मिन्? **अस्मिन्** प्राणवाते। कस्याम् ? **तनौ** शरीरे। **एति** आगच्छति। का ? **मृत्युः** । कस्मात् ? **निर्गमात्** । वातस्य शरीरान्निर्गमनादित्यर्थः । **नास्ति**। कः ? **कर्ता**

---

१. गन्थे- क.
२. कारणे- क.

निर्माणकारी । कः ? **अपरोऽन्यः**। क्व ? **देहतः** शरीरे(रात्)। किं कृत्वा ? **विहाय**। कम् ? **अनिलं** प्राणवायुम् । कस्मात् ? **तस्मात्** कारणात् ॥ ४४॥

**यो मूर्च्छित्वा हरति सकलं देहतो दोषजालं**
**मृत्युं गत्वाऽमरपदवीं यच्छति स्वानुरूपाम् ।**
**बन्धं लब्ध्वा सुचिरमभितो मौक्षसौख्यप्रदाता**
**लोके लोकोत्तरविषयतो वायुरेकस्तदीशः ॥ ४५ ॥**

**हरति** संहरति। कः ? **यो** वायुः । किम् ? **दोषजालं** व्याध्यादिदोषसमूहम्। कुतः ? **देहतः** शरीरात् । किं कृत्वा ? **मूर्च्छित्वा** मूर्च्छां गत्वा । **यच्छति** ददाति । कः ? **वायुः** । काम् ? **अमरपदवीम्** । कथंभूताम् ? **स्वानुरूपाम्** । आत्मसदृशीम् । कथं नु पुनः किं कृत्वा ? **गत्वा** । कम् ? **मृत्युं** मरणम् । भवति । कः ? **वायुः** । कथंभूतः ? **मोक्षसौख्य-प्रदाता** मुक्तिसुखदः। कुतः ? **अभितः** सर्वतः । कथम् ? **सुचिरं** चिरकालात् । किं कृत्वा ? **लब्ध्वा** प्राप्ता(प्य) । कम् ? **बन्धं** बन्धनम् । भवति । कः ? **वायुः** । कथंभूतः ? **ईशः** ईश्वरः । कथंभूतः ? **एकः** अद्वितीयः । कुतः ? **लोकोत्तरविषयतः** लोकातीतविषयात् । कस्मिन् ? **लोके** त्रिलोके । कथंभूतम् ? **सकलं** समस्तम् ॥ ४५ ॥

**त्यक्त्वा चायं वपुषि पवनः पञ्चधा भेदयुक्तः**
**प्राणापानस्तदनु च समानोऽप्युदानश्चतुर्थः ।**
**व्यानः पञ्चेत्यनिलवहनं सर्वतो वेत्यभोगान्**
**त्रि( त्रे )धानन्दाक्षरमतुलयद् वज्रवर्णस्य जापात् ॥ ४६ ॥**

**अतुलयत्** अनुगच्छति । कः ? योगी । किं वा । **त्र्य( अ )क्षरम्** । कति ? **त्रि( त्रे )धा** । किं कृत्वा ? **अवेत्य** ज्ञात्वा । किम् ? **अनिलवहनं** वायुवाहम्। भवति। का ? सर्वसिद्धिः । कस्मात् ? **वज्रवर्णस्य** त्र्यक्षरस्य । **जापात्** । भवति । कः ? **अयं** पवनः । कथंभूतः ? **पञ्चधा** पञ्चप्रकारः। कस्मिन् ? **वपुषि** शरीरे। कथंभूतः ? विद्यमानो **भेदयुक्तः** । कथं च । किं कृत्वा ? **त्यक्त्वा** । कथमिति । कथम् ? **पञ्च** । कः ? **प्राणः** । न केवलं प्राणः **अपानश्च** । कथम् ? **तदनु** पश्चात् । कथं च । भवति । कः ? **समानोऽपि** । न केवलं समानः **उदानश्च** । कथंभूतः ? **चतुर्थः** । न केवलमुदानो **व्यानश्च** । तथा च —

हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले ।
उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः ॥ ४६ ॥

***[ दत्वा मन्त्रस्य वह्नौ वयमथ महायागतत्त्वानुसाराद्**
**जानीमो ये विविधवलिनो ] यस्य चाभ्यन्तरस्थाः ।**
**सर्वाद्वारस्तदनु च निरतः [ कश्च बन्धः किमूर्ध्वं**
**गुर्वाज्ञातश्च शास्त्रान्निचलनिभृताः प्रस्तुतं के च भोगाः ]॥ ४७ ॥**

**दत्त्वा** मन्त्रस्य । कस्मात् ? **वह्नौ वयं महायागतत्त्वानुसारात्** अनेकचत्वारमहा--- ---मन्त्रात्म । कथंभूताः ? **विविधवलिनः** नानाप्रकार------लिख्याः । कथंभूताः ? **अभ्यन्तरस्थाः** अन्तःस्थिताः । कस्य ? **यस्य** मन्त्रस्य । कथं च **गुर्वा**------। कथं च **सर्वाद्वार** सर्व------कथम् ? **अनु** पश्चात् । कथं च भवति । कः ? **बन्धः** सुखबन्धः । कथंभूताः ? **निचलनि**------न केवलं ------ न केवलं शास्त्रवचनं कथंभूतम् ? **प्रस्तुतं** प्रभूतम् । कथं च यस्मात् ------**भोगाः** ------॥ ४७ ॥

**आदावादिस्वरमथ तथा तं पुनः षोडशान्तं**
**मध्ये शेषे सपरममलं व्यञ्जनं संप्रदद्यात् ।**
**आदावन्ते स्वरमपि पुनः पञ्चमं पञ्चमान्तं**
**खण्डेन्दुं खं त्वथ च गुणसंयोगतः साध्ययुक्तः ॥ ४८ ॥**

**संप्रद्यात्** ददाति । कः योगी । कम् ? **आदिस्वरम्** अकारम् । **आदौ** प्रथमतः संप्रदद्यात् । कः ? योगी । कम् ? स्वरं **पञ्चमान्तम्** उकारम् । कथंभूतम् । **षोडशान्तम्** । कस्मिन् ? **मध्ये**। कथं पुनः ? कथम् ? **तथा** तेन प्रकारेण। पूर्ववत्। कथम् ? **अथ** अनन्तरं संप्रदद्यात् । कः ? योगी । किम् ? **व्यञ्जनं सपरं** हकारम् । कथंभूतम् ? **अमलं स्वेन** (स्वरेण) रहितम् । कस्मिन् ? **शेषे** अवसाने । संप्रद्यात् । कः ? योगी । कम् ? **स्वरं पञ्चमम्** उकारम् । कस्मिन् ? **आदौ** प्रथमतः संप्रदद्यात् । कः ? योगी । कं स्वरम् ?

---

* [मूलमातृकायामस्य पद्यस्य केवलं द्वितीयपादस्य परार्धं तृतीयस्य च पूर्वार्धमात्रमुपलब्धम् । टीकाऽपि पदे पदे खण्डिता । खण्डितामेव टीकामवलम्ब्य मया कथञ्चित् पद्यपूरणं चेष्टितम् । स्वीयः पाठः [ ] कोष्ठान्तः-स्थापितः ।]

**पञ्चमान्तं** ऊकारम् । कस्मिन् ? **अन्ते** अवसाने । कथम् ? पुनः **पुनरपि** संप्रदद्यात् । कः ? योगी । **खण्डेन्दुम्** अर्द्धचन्द्रम् । **खं तु** शून्यम् । कुतः **गुणसंयोगतः** ओंकारादिगुणसंयोगात्। कथंभूतम् ? **साध्ययुक्तं** साध्यसहितम् । कथम् ? **अथ** अनन्तरं च ॥ ४८ ॥

**ॐकारोऽन्तर्गमनवशतश्चन्द्रमाः सृष्टिहेतुं**
**तत्राःकारो वशपरिणतो भानुरास्थापकोऽसौ ।**
**हूँकारोऽसुक्षयकरणतो राहुरेवान्तकारी**
**तस्मादेषां समरसगतिर्वज्रजापाद्विधेया ॥ ४९ ॥**

अस्ति । कः ? **ॐकारः** । कथंभूतः ? **चन्द्रमाः** । कुतः ? **अन्तर्गमनवशतः** अभ्यन्तरगतिवशात् । कथंभूतः ? **सृष्टिहेतुः** उत्पत्तिकारणम् । कुत्र ? **तत्र** देहे । भवति । कः ? **असौ आःकारः** । कथंभूतः ? **भानुरादित्यः** । पुनः कथंभूतः ? **आस्थापकः** स्थिति-कारकः । कथंभूतः ? **अवशपरिणतः** स्वतन्त्रपरिणामात् । भवति । कः ? **हूँकारः** । कथ-भूतः ? **राहुः** । पुनः कथंभूतः ? **अन्तकारी** प्रलयकर्त्ता । कुतः? **असुक्षयकरणतः** प्राणक्षय-करणात्। भवति । का ? **समरसगतिः** तुल्यगतिः । कथंभूता ? **विधेया** कर्तव्या । केषाम् ? **एषां** चन्द्रादीनाम् । कस्मात् ? **वज्रजापात्**। कस्मात् ? **तस्मात्** कारणात् ॥ ४९ ॥

**हूँ निर्यान्तं प्रणवमनुगच्छन्तमन्तः स्थितं त्वाः**
**सर्वावस्थास्वविचलमतिर्लक्षयेत् प्राणवातम् ।**
**तावद् यावद् द्वयुतमरुतां षोडशानां शतानां**
**नाली( डी )श्वासाद् भवतिमनसोऽचिन्त्यतत्त्वप्रवेशः ॥ ५० ॥**

**लक्षयेत्** चिन्तयेत् । कः योगी । कम् ? **प्राणवातं** प्राणवायुम् । कथंभूतम् ? **निर्यान्तं** निष्क्रमन्तम् । कम् ? **हूँ** हूँकारम् । पुनः कथंभूतम् ? **स्थितम्** । कम् ? **आः** आःकारम् । क्व ? **अन्तः** अभ्यन्तरे । कथंभूतः योगी ? **अविचलमतिः** स्थिरमतिः। कासु ? **सर्वावस्थासु** कायवाक्चित्तव्यवस्थासु । कथं तावद् ? भवति । कः ? **अचिन्त्यतत्त्वप्रवेशः** सहजतत्त्वप्रवेशः। कस्य ? **मनसः** । कस्मात् ? **नाली( डी )श्वासात्** नाडिकाश्वासतः । केषाम्? **द्वयुतमरुतां** विंशतिसहस्रश्वासवायूनाम् । कथंभूतानाम् ? **शतानां** कतिपयानाम् ? **षोडशानाम्** । कथम् ? **यावत्** ॥ ५० ॥

**संक्षिप्तं वा स्वरुचिवशतो मन्त्रसंकेतमेतद्**
**गुह्याद्गुह्यं स्वहितचतुरश्चिन्तयेच्चारुरूपम् ।**
**ॐकारेण प्रविशदनिलं सर्वसम्पत्तिबीजं**
**हूँकारेणोद्गमननिपुणं घण्टिकायोगपूर्वम् ॥ ५१ ॥**

**चिन्तयेत्** । कः ? योगी । किम् ? **एतद् मन्त्रसंकेतं** मन्त्ररहस्यम् । कथंभूतम् ? संक्षिप्तं स्तोकम् । पुनः कथंभूतम् ? **गुह्याद्गुह्यं** गम्भीराद्गम्भीरम् । कुतः ? **स्वरुचिवशतः** आत्माभिलाषवशात्। कथम् ? **वा** आशङ्कायाम्। कथंभूतो योगी ? **स्वहितचतुरः** आत्महित-विचक्षणः । कथंभूतं मन्त्रसंकेतम् ? **चारुरूपं** मनोज्ञकान्तिम् । पुनः कथंभूतम् ? **प्रविशन्** प्रवेशं कुर्वन् । कम् ? **अनिलं** वायुम् ? केन ? **ॐकारेण** । पुनः कथंभूतम् ? **सर्वसम्पत्ति-बीजं** सर्वसमृद्धिकारणम्। पुनः कथंभूतम् ? **उद्गमननिपुणम्** ऊर्ध्वगमनविचक्षणम्। केन ? **हूँकारेण** । कथम् ? **घण्टिकायोगपूर्वं** घण्टिकामिलनप्रथमम् ॥ ५१ ॥

**इत्थं वाताभ्यसनमनसो योगिनो नैव युक्तं**
**भिक्षाकृत्यं न च बहुतरं भोजनं नापि निद्रा ।**
**नो वाग्जापो न च हठवशाद् वायुरोधो न पाठः**
**पूजा होमादिकमपि तथा त्याज्यमस्मिन् समाधौ ॥ ५२ ॥**

नास्ति **न** भवति । किम् ? **भोजनम्** । कथंभूतम् ? **बहुतरम्** । पुनः कथंभूतम् ? **न** भवति। **युक्तम्** उचितम् । कथम् ? **एव**। पुनः कथंभूतम्? **भिक्षाकृत्यम्**। कथं च कस्य ? **योगिनः** । कथंभूतस्य ? **वाताभ्यसनमनसः** वाय्वभ्यासचित्तस्य । कथम् ? **इत्थम्** अमुना प्रकारेण । **न** भवति । का ? **निद्रा** । कथंभूता ? **उचिता** । कथम् ? **अपि** नो भवति। कः ? **वाग्जापः** वचनवावदूकत्वम् । कथं वा न च भवति । कः ? **वायुरोधो** वातावरोधः । कस्मात् ? **हठवशात्** सहसा । **न** भवति । कः **पाठः** शब्दाध्येयम् । न भवति । का ? **पूजा** देवतार्चा । कथंभूता ? उचिता । **न** भवति । किम् ? **होमादिकं** यज्ञादिकम् । कथंभूतम् ? **त्याज्यं** परिहरणीयम् । कथम् ? **तथा** तेन प्रकारेण । कस्मिन् ? **समाधौ** । **अस्मिन्** दोलामन्त्रसाधने ॥ ५२ ॥

**नानादानं सुबहुयजनं देवतार्चा समाधिः**
**शीलं तीर्थाश्रयणमखिलं मन्त्रजापादिकं च ।**
**एकस्यास्याक्षयशुभगतेः प्राणजापस्य नैतत्**
**तुल्यं गच्छेद् यदिदमभितः प्राणसन्धारणाय ॥ ५३ ॥**

**न गच्छेत्** न व्रजेत् । किमेतत् ? **नानादानं** दानत्रयात्मकम् । आमिषदानम् अभयदानं धर्मदानं चेति । किम् ? **तुल्यं** तुलनाम् । कस्य ? **अस्य प्राणजापस्य** । कथंभूतस्य ? **एकस्य** । पुनः कथंभूतस्य ? **अक्षयशुभगतेः** अविनष्टपुण्यगतेः । न केवलं नानादानं **यजनं** च यज्ञं च । कथंभूतम् ? **सुबहु** अनेकप्रकारम् । न केवलं यजनं **देवतार्चा** देवपूजनं च । न केवलं देवतार्चा **समाधिर्ध्यानं** च। न केवलं समाधिः **शीलं** पञ्चेन्द्रियनिग्रहं च। न केवलं [शीलं] **तीर्थाश्रयणं** तीर्थसेवा च । कथंभूतम् ? **अखिलं** समस्तम् । न केवलं तीर्थाश्रयणं **मन्त्रजापादिकं** च । न गच्छेत् न व्रजेत् । किमिदं नानादानादिकं किं **तुल्यं** तुलनाम् । कस्मै ? **प्राणसन्धारणाय** प्राणरक्षणार्थम् । कुतः ? **अभितः** सर्वतः । कथम् ? **यत्** यस्मात्कारणात् ॥ ५३ ॥

**लीने भावे मिलति मरुतामेवमभ्यासयोगात्**
**पुष्टिं शान्तिं वशमथ तथोच्चाटनं मारणं च ।**
**कुर्यादेतद् यदभिलषितं दर्शनान्मण्डलानां**
**रोधादेषां वपुषि परतः सिद्धिरेवोत्तमा स्यात् ॥ ५४ ॥**

**कुर्यात्** करोति। कः ? योगी। किं **तत्** ? एतत् कथंभूतम्? **अभिलषितम्** इच्छितम्। कस्मात् ? **दर्शनात्** अवलोकनात् । केषाम् ? **मण्डलानां** पञ्चमण्डलानाम् । कस्मात् ? **अभ्यासयोगात्** प्रजनात् (प्रयत्नात्)। क्व सति ? **मिलति** एकीभवति सति । केषाम् ? **मरुतां** वायूनाम् । कस्मिन् ? **भावे**। कथंभूते ? **लीने** विलीने। कथंभूतमभिलषितम् ? **पुष्टिं** पूर्णताम् । न केवलं पुष्टिं **शान्तिम्** उपशमनम् । न केवलम् उपशमनं **वशं** वशित्वम् । कथम् ? **अथ** । न केवलं वशम् **उच्चाटनम्** उद्व्यसनं च । कथम् ? **तथा** तेन प्रकारेण । न केवलमुच्चाटनं **मारणं च** । **स्याद्** भवेत् । का ? **सिद्धिः** लौकिकलोकोत्तरा । कथम् ? **एव** निश्चितम् । कस्मात् ? **रोधात्** अवरोधात् । केषाम् ? **एषां** मण्डलानाम् । कस्मिन् ? **वपुषि** शरीरे । कुतः ? **परतः** परत्र पश्चात् । कथंभूता ? **उत्तमा** महती ॥ ५४ ॥

**ज्ञात्वा चेत्थं सकलविषयासङ्गमुत्सृज्य योगी**
**गुर्वाम्नायात् त्वरितममलं वागुदाहारवर्ज्यम् ।**
**जप्त्वा मन्त्रं स्ववशमुपनीयात्र वातं शरीरे**
**छायामायोपममिह मनो धारयेच्छून्यतायाम् ॥ ५५ ॥**

**धारयेत्** संदधाति । कः ? **योगी** । किम् ? **मनः** चित्तम् । क्व ? **इह शून्यतायां** सर्वधर्मशून्यतासमाधौ । कथंभूतं मनः ? **छायामायोपमं** प्रतिबिम्बमायासदृशम्। किं कृत्वा ? **उपनीय** उपस्थाप्य । कम् ? **वातं** प्राणवायुम् । क्व ? **अत्र शरीरे** । कथं ? **इत्थम्** । **स्ववशं** स्वायत्तम् । किं कृत्वा ? **जप्त्वा** । कम् ? **मन्त्रं** वज्रजापमन्त्रम् । कथंभूतम् ? **वागुदाहार-वर्ज्यं** वचनप्रकाशवर्जितम् । पुनः कथंभूतम् ? **अमलं** सर्वसंकल्परहितम् । कथम् ? यथा **त्वरितं** शीघ्रम् । कस्मात् ? **गुर्वाम्नायात्** गुरूपदेशात्। किं कृत्वा ? **उत्सृज्य** त्यक्त्वा। कम् ? **सकलविषयासङ्गं** समस्तरूपादिविषयासक्तिम् । किं कृत्वा ? **ज्ञात्वा** । कथम् ? **इत्थं** अमुना प्रकारेण ॥ ५५ ॥

**किं वा ज्ञात्वा वितथविषयान् भूजलाग्नीरणादीन्**
**एकानेकाकलनविरहाच्छून्यतावस्तुतत्त्वम् ।**
**चैतःस्थैर्यं गमयितुमिदं भाव्यमाकाशकल्पं**
**चित्ते बद्धे त्रिजगदखिलं यन्निरुद्धं स्वयं स्यात् ॥ ५६ ॥**

भवति । किम् ? **चेतः** चित्तम् । कथंभूतम् ? **भाव्यं** भावनीयम् । किंविशिष्टम् ? **आकाशकल्पं** गगनसदृशम्। किंकर्तुम् ? **गमयितुं** पापचित्तम्। किम् ? **स्थैर्यं** स्थिरत्वम्। किं कृत्वा ? **ज्ञात्वा** बुद्ध्वा । कान् ? **भूजलाग्नीरणादीन्**। कथंभूतान् ? **वितथविषयान्** मिथ्या-स्वरूपान् । कथम् ? **किं वा** । कथम् **शून्यतावस्तुतत्त्वं** शून्यताद्रव्यतत्त्वमिव । कस्मात् ? **एकानेकाकलनविरहात्** एकानेकत्वज्ञानरहितत्वात् । **स्यात्** भवेत् । किम् ? **त्रिजगत्** त्रि-भुवनम् । किमर्थं कथंभूतम् ? **निबद्धं** निवृत्तम् । कथम् ? **स्वयम्** आत्मना । कथम् ? **यत्** यस्माद्धेतोः । क्व सति ? **चित्ते बद्धे** सति ? निरुद्धे सति ॥ ५६ ॥

**वायुर्यस्मात् खकुसुमसमं युक्तितश्चर्च्यमानं**
**तत्रोद्भूतं त्रिभवमखिलं स्वप्नवद् भाति यस्मात् ।**
**युक्त्या चेतोऽप्यसदिति मृषाभावनायाः फलं किं**
**मिथ्या नश्येद् ध्रुवमिदमतः सत्यमेवाविनाशि ॥ ५७ ॥**

**भाति** प्रतिभाति प्रथते । किम् ? **चेतश्चित्तम्** । कथंभूतम् ? **फलम्** । कस्मात् ? **मृषाभावनायाः** मिथ्यावासनायाः । कथम् ? **किं** कथमिति । किम् ? **असत्** । अद्रव्यत्वम् । **अपि** । कया ? **युक्त्या** शास्त्रविचारेण । कथंभूतं चेतः ? **चर्च( र्च्य )मानं** अत्युच्यमानम् । कम् ? **त्रिभवम्**। -----किंवत् ? **स्वप्नवत्** स्वप्नसदृशम्। कथंभूतम् ? **अखिलं** समस्तम् । कथंभूतं चेतः ? **खकुसुमसमम्** आकाशकुसुमसमम् । कथंभूतम् ? **तत्रोद्भूतं** तत्रोत्पन्नम् । कम् ? वायुम् । कया ? युक्त्या । कस्मात् ? यस्मात् कारणात् । **नश्येत्** प्रणश्येत् । किम् ? **मिथ्या** अलीकत्वं भवति । किम् ? **सत्यं** तथ्यम् । कथंभूतम् ? **अविनाशि** अनश्वरम् । कथम् ? **एव** निश्चितम् । कुतः ? **यतः** विचारात् । क्व ? **इह** संसारे । कथंभूतं सत्यम् ? **ध्रुवं** निश्चलम् । कस्मात् ? **यस्मात्** कारणात् ॥ ५७ ॥

**चित्तं यस्मात् प्रकृतिसुभगं स्वप्रमाणोपनीतं**
**ध्यातुं युक्तं परमसुखदं तथ्यमेवात्मतत्त्वम् ।**
**यत्तु ध्यात्वा प्रथममतथा भाव्यते तच्च तथ्यं**
**तत्कृत्वाङ्गं प्रथममशुचिः क्षाल्यतेऽतीवकष्टम् ॥ ५८ ॥**

भवति । किम् ? **चित्तम्**। कथंभूतम् ? **युक्तमुचितम्**। किं कर्तुम् ? **ध्यातुं** चिन्तयितुं भावयितुम्। कथंभूतम् ? **प्रकृतिसुभगं** स्वभावशुद्धम्। कस्मात् ? **यस्मात्**। पुनः कथंभूतम् ? **स्वप्रमाणोपनीतम्** आत्मीयप्रमाणोपस्थितम् । पुनः कथंभूतम् ? **आत्मतत्त्वम्** आत्मप्रमाणम् । पुनः कथंभूतम् ? **तथ्यं** सत्यम् । **भाव्यते** चिन्त्यते । किम् ? **तत्** चित्तम् । कथंभूतम् ? **तथ्यं** प्रमाणम् कथं च किं कृत्वा ? **ध्यात्वा** । कथम् ? **प्रथमं** प्रथमतः । कथंभूतम् ? **अतथा** विपरीतम् । कथम् ? **यत्** यस्मात्कारणात् । कथं तु **क्षाल्यते** । किम् ? **तत्** चित्तम् । किं कृत्वा ? **कृत्वा**। कथम् ? **अङ्गं** भागम् । कथम् ? **प्रथमम्** । कथंभूतम् ? **अशुचि** अशुचिमयम् । पुनः कथंभूतम् ? **अतीवकष्टम्** अतीवदुःखम् ॥ ५८ ॥

**नैव क्वाप्यस्त्यपदमपरं यद् दिशां भागभागं**
**स्वस्यान्यस्य स्फुटमनुभवं याति सर्वो जनोऽयम् ।**
**भागोऽपीत्थं तदपरविभागादमूर्तो न यावद्**
**नातो नैकं तदपगमतो दिक् तथा नास्त्ययोगात् ॥५९ ॥**

**याति** गच्छति । कः ? **अयं सर्वः** सकलः। किम् ? **अनुभवम्** अनुभूतिम्। कस्य ? **स्वस्य** आत्मनः। न केवलं स्वस्य **अन्यस्यापरस्य** च। कथम् ? यथा **स्फुटं** व्यस्तं **नैवास्ति** । किम् ? **यत्** । **अपदं** अनवस्थानम् । कथंभूतम् ? **अपरम्** ? **क्वापि** । कासाम् ? **दिशां** पूर्वादीनाम् । कथंभूतम् ? **भागभागं** सत् । **न** नास्ति । कः ? **भागोऽप्यंशः** । कथंभूतः ? **अमूर्तः** असद्रूपः । कस्मात् ? **अपरविभागात्** अन्यतः । कथम् ? **तत्** तस्माद्धेतोः। कथम् ? **इत्थम्** अमुनाप्रकारेण। कथम् ? **यावत्** । नास्ति । किम् ? **एकं** वस्तु । कुतः ? **अतः** । **तदपगमतः** तस्यापराङ्गस्य अस्तत्वात् । नास्ति । का ? **दिक्** । कस्मात् ? **अयोगात्** असंसर्गात् । कथम् ? **तथा** तेन प्रकारेण ॥ ५९ ॥

**सद्वस्त्वात्मादिकमिह परैः स्वीकृतं यत्तदेकं**
**नैतत् सिद्ध्येत् क्रमत इतरासां क्रियाणामसत्त्वात् ।**
**संपूर्णाव्याहतबलवशान्न क्रमात् कार्यसिद्धि-**
**र्युक्ता कार्यं क्रमपरिचयान्नाक्रमादित्यसत्यम् ॥ ६० ॥**

**न सिद्ध्येत्** न निष्पद्यते । किम् ? **एतत्** आत्मादिकम् । आदिशब्दात् पृथ्वीआप-स्तेजोवायुराकाशकालोदिग्मनश्चेति । कथंभूतम् ? **सद्वस्तु** द्रव्यस्वरूपम् । पुनः कथंभूतम् ? **स्वीकृतम्** ? अनुकृतम् । कैः **परैः** वैष्णवादिभिः । कुतः ? **अनित्यत्वात्** । कासाम् ? **क्रियाणां** कार्याणाम् । कथंभूतानाम् ? **इतरासाम्** अन्यासाम् । कुतः ? **क्रमतः** अनुक्रमात् । न भवति। का ? **कार्यसिद्धिः** । कथंभूता ? **युक्ता** उचिता । कस्मात् ? **क्रमात्** अनुक्रमात्। पुनः कस्मात् ? **सम्पूर्णाव्याहतबलवशात्** सम्पूर्णधामातुच्छविनष्टशक्तिप्रभावात् । भवति किम् ? तत्कार्यम्। कस्मात् ? **क्रमपरिचयात्** अनुक्रमज्ञानात्। न भवति। किम् ? **असत्यम्**। कथमिति ? **कस्मात्** अननुक्रमात् ॥ ६० ॥

**नित्यं कर्त्ता सपदि कुरुते स्वेच्छया वापि चेच्छा**
**भेदाभेदद्वितयपतिता कर्तृनाशं विदध्यात् ।**
**भेदादिच्छापरवशमतिः स्यादभेदात् स्थिरेच्छा**
**नित्येच्छस्य क्षणमपि विलम्बो न युक्तः क्रियायाम् ॥ ६१ ॥**

**कुरुते** करोति । कः ? **कर्ता** ईश्वरः । किम् ? **जगदादि** । कथम् ? **सपदि** तत्-क्षणादेव । कया ? **स्वेच्छया** आत्मगतेच्छया । कथंभूतः ? **नित्यः** अविनश्वरः । कथम् ? **वा** प्रश्ने । **विदध्यात्** कुर्यात् । का ? **इच्छा** । कम् ? **कर्तृनाशं** [1]निर्मातृनाशम्। कथंभूता सती ? **भेदाभेदद्वितयपतिता** एकत्वानेकत्वद्वयसंशक्ता । कथं च कथम् अपि । **स्याद्** भवेत् । कः ? कर्ता। कथंभूतः ? **परवशमतिः**। कस्मात्। ? **भेदात्** । भिन्नत्वात्। भवति। का ? **स्थिरेच्छा**। कस्माद् ? **अभेदात्** । एकत्वात् । न भवति। कः ? **विलम्बः** । कथंभूतः ? **युक्तः** उचितः। कस्य ? **नित्येच्छस्य** । कथम् ? **क्षणमपि** मुहूर्तमपि । कस्याम् ? **क्रियायां** कार्ये ॥ ६१ ॥

**सामग्र्या चेत् सहकृदकरोत् तत्कृता सापि सर्वा**
**सामग्रीयं किमिति सकृदेवैष कार्यं न कुर्यात् ।**
**आधारोऽयं जनयति न चेत् सोऽप्यसिद्धो ह्यसङ्गात्**
**संसर्गे सावयववपुरित्यर्थजातेर्विरोधात् ॥ ६२ ॥**

**अकरोत्** कृतवान्। कः ? कर्ता । कथंभूतः ? **सहकृत्** युक्तकृत् । कया ? **सामग्र्या** समुदायेन । कथम् ? **चेत्** यदि । **सापि** । का ? **इयं सामग्री** समुदायः। कथंभूता ? **सर्वा** सकला । पुनः कथंभूता ? **तत्कृता** ईश्वरनिर्मिता । **न कुर्यात्** न करोति । कः ? **एषः** कर्ता। किम् ? **कार्यम्** । कथम् ? **सकृत् एव** एकवारम् । कथम् ? किमिति **न जनयति** नोत्पादयति । कः ? **अयं** कर्ता । काः ? सामग्रीः । कथम् ? **चेत्** । कथंभूतः ? **आधारः** धारणपात्रः । अस्ति । कः ? [**अयम्** ] कर्ता । कथंभूतः ? **असिद्धो**ऽनिष्पन्नः। कस्मात् ? **असंसर्गात्** असंपर्कात् । कथम् ? **हि** यस्मात् । भवति। कः ? कर्ता। कथंभूतः ? **सावयव-वपुः** सहावयवशरीरः। कस्मिन् सति ? **संसर्गे**। कस्मात् ? **विरोधात्**। कस्याह– **अर्थजातेः** धर्मजातेः । कथमिति ॥ ६२ ॥

---

१. नास्ति- क.

**तस्माच्छून्यं सहजममलं निर्निमित्तं प्रकाशं**
**व्योमप्रख्यं[१]+ + + + + + + + + + + + + + ।**
**+ + + + + + + + + + + + + + + + + + +**
**+ + + + + + + + + + + + + + + + + + + ॥६३-६४॥**

------ रीक्षेत् । कम् ? **संसारम्** । **तदुपशमनं** मोक्षं वा । न केवलं तदुपशमनम् **आत्मानं वा** । न केवलं आत्मानम् **अपरं** कर्तादिकम् । कथम् ? **अथ** । न केवलम् अपरं **द्रष्टृदृश्यादिकं** वा । कथम् ? **तथा** तेन प्रकारेण ॥ ६३-६४॥

**क्वाप्याकाशे विकृतिरहिते संप्रवेशाय कश्चि-**
**न्नैवोपायोऽस्त्यपरमपि तथा सर्वतो व्यापकत्वात् ।**
**विश्वव्यापिन्यविचलमतौ सर्वतोऽपायहीने**
**नोपायस्य क्वचिदपि तथा संभवः शून्यताख्ये ॥ ६५ ॥**

**नैवास्ति** । कः ? **उपायः** । **कश्चित्** । कस्मै ? **संप्रवेशाय** । ---------- कस्मिन् ? **क्वाप्याकाशे** । कथंभूते ? **विकृतिरहिते** विकाररहिते । कस्मात् ? **व्यापकत्वात्** । कुतः ? **सर्वतः** सर्वत्र । कथम् ? **यथा** । कथम् ? **परम्** अत्यर्थेन । नास्ति । कः ? **संभवः** समुद्भूतिः । कुत्र ? **क्वचिदपि** । **शून्यताख्ये** शून्यतायाम् । कथम् ? **तथा** तेन प्रकारेण । कस्य ? **उपायस्य** । कथंभूते शून्यताख्ये ? **विश्वव्यापिनि** जगन्मये । पुनः कथंभूते ? **अविचल-मतौ** निश्चलबुद्धौ । पुनः कथंभूते ? **अपायहीने** सर्वसंकल्पदुःखरहिते । कुतः ? **सर्वतः** सर्वत्र ॥ ६५ ॥

**निःश्रेण्यारोहणमिह यथा कश्चिदज्ञो विधाय**
**भ्रान्त्याकाशे प्रविशति ततोन्मज्जति प्रीयते च ।**
**देवाद्यालम्बनमपि तथा संविधाय भ्रमेण**
**ज्ञाने लीनो भवति तदयं तिष्ठति स्वं च नन्देत् ॥ ६६ ॥**

---

१. इतः परं ६३-६४ पद्ये तट्टीका च खण्डिता ।

**प्रविशति** प्रवेशं करोति । कः ? **अज्ञः** । कः ? अत्र **कश्चिद् आकाशे** शून्ये । कया ? **भ्रान्त्या** भ्रमेण । किं कृत्वा ? **विधाय** कृत्वा । किम् ? **आरोहणम्** आक्रमणम् ऊर्ध्वगमनम् । कया ? **निःश्रेण्या** सोपानेन । क्व ? **इह** संसारे । कथम् ? यथा **उन्मज्जति प्रीयते च** प्रीतो भवति । कथम् ? **तथा** । भवति । कः ? **अयमज्ञो** मूढः । कथंभूतः ? **लीनो** मग्नः । कस्मिन् ? **ज्ञाने** । कथं तत् ? किं कृत्वा ? **संविधाय** कृत्वा । किम् ? **देवाद्यालम्बनं** देवाद्याश्रयणम् । कथमपि । कथम् ? **तथा नन्देत्** क्रीडति । **तिष्ठति** च । कथम् ? **स्वम्** स्वयम् ॥ ६६ ॥

**व्योमव्याप्तिं जल( ड )मतिजनो यद्वदेवाभिवाञ्छेत्**
**तत्रावस्थस्तदनुगतिकस्तत्स्वभावस्तदीहः ।**
**ज्ञानप्राप्तिं भ्रमहतमतिः प्रार्थयेत् तद्वदेव**
**ज्ञानाकारं स्वमविगणयन्नाद्यनुत्पन्नरूपम् ॥ ६७ ॥**

**अभिवाञ्छेत्** अभिलषेत् । कः ? **जल( ड )मतिजनः** मन्दबुद्धिजनः । काम् ? **व्योमव्याप्तिं** आकाशप्रसृतिम् । किंवत् ? **यद्वत्** यथा । कथंभूतः ? **अवस्थः** । कुत्र ? तत्र जल(ड)मतौ । पुनः किंविशिष्टः ? **तदनुगतिकः** तत्र जल(ड)मतौ अनुगामिकः । पुनः किंविशिष्टः ? **तत्स्वभावः** तत्प्रकृतिः। पुनः किंविशिष्टः ? **तदीहः** तच्चेष्टः। **प्रार्थयेत्** याचते । कः ? पुरुषः ? **भ्रमहतमतिः** अविद्यानष्टबुद्धिः । काम् ? **ज्ञानप्राप्तिं** [१]तत्त्वप्राप्तिम् । किंवत् ? **तद्वत्** तथैव । कथमेव किं कुर्वन् ? **अविगणयन्** अजानन् । किम् ? **स्वम्** आत्मानम् । कथंभूतम् ? **ज्ञानाकारं** ज्ञानस्वरूपम् । पुनः किंविशिष्टम् ? **आद्यनुत्पन्नरूपं** पूर्वानुत्पाद-स्वरूपम् ॥ ६७ ॥

**तत्त्वस्यास्य प्रहततमसो भावनाभावकोऽहं**
**मुद्रासिद्धिर्झटिति महती स्यान्ममास्मात् समाधेः ।**
**इत्थं भेदाध्यवसितमतेस्तस्य वार्तापि कुत्र**
**भ्रान्त्या व्योमोद्भवकुसुमतो गन्धमाजिघ्रतीव ॥ ६८ ॥**

---

१. नास्ति- क.

भवति । का ? **वार्ता** वृत्तान्तः । कस्य ? **तस्य** । कथंभूतस्य ? **भेदाध्यवसितमतेः** भिन्नचिन्तितबुद्धेः । कुत्र ? **कुत्रापि** । कथम् ? **इत्थं** अनेन प्रकारेण । अस्मि । कः ? **अहम्** । कथंभूतः ? **भावनाभावकः** चिन्ताचिन्तकः । कस्य ? **अस्य** तत्त्वस्य। कथंभूतस्य ? **प्रहततमसः** विनष्टाविद्यस्य ? **स्यात्** भवेत् । का ? **मुद्रासिद्धिः** । कस्य ? **मम** । कथंभूता ? **महती** गुर्वी । कथम् ? **झटिति** तत्क्षणादेव । कस्मात् ? **अस्मात् समाधेः** । **जिघ्रतीव** आघ्रातीव। कः ? **स** पुरुषः। कम् ? **गन्धम्**। कस्मात् ? **व्योमोद्भवकुसुमतः** आकाशोद्भव-कुसुमतः ॥ ६८ ॥

**स्वाधिष्ठानात् स्वयमुदयते योगिनामिष्टसिद्धिः**
**सर्वैर्वाऽचिन्ति तत्सहजतः किं वृथा चिन्तितेन ।**
**स्थैर्यं तस्मादविकलहृदा कायवाक्चित्तशून्ये**
**निश्चिन्तेऽस्मिन्नतुलितसुखे शून्यताख्ये समाधौ ॥ ६९ ॥**

**उदयते** समुद्भूति(द्भवति) । का ? **इष्टसिद्धिः** अभिलषितसिद्धिः। केषाम् ? **योगि-नाम्** । कथम् ? **स्वयम्** आत्मना । कस्मात् ? **स्वाधिष्ठानात्** । आत्मसंवेदनात् । **अचिन्ति** चिन्तितम् । किम् ? **तत्** ज्ञानम् । कैः ? **सर्वै**र्योगिभिः । कुतः ? **सहजतः** स्वभावात् । भवति। **किम्** । केन ? **वृथाचिन्तितेन** मिथ्याचिन्तितेन । भवति । किम् ? **स्थैर्यं** स्थातव्यम्। केन ? **अविचलहृदा** निश्चलचित्तेन । कस्मात् ? **तस्मात्** कारणात् । कस्मिन् ? **अस्मिन् समाधौ**। कथंभूते ? **शून्यताख्ये**। पुनः कथंभूते ? **अतुलितसुखे** निरुपमसुखे। पुनः कथंभूते ? **निश्चिन्ते** चिन्तातिक्रान्ते । पुनः कथंभूते ? **कायवाक्चित्तशून्ये** ॥ ६९ ॥

**ध्याने ज्ञानामृतजलनिधावीदृशे मग्नचित्तो**
**भूत्वोन्मज्जन्नपि करुणया स्वप्नवद्वीक्ष्य विश्वम् ।**
**नैवासज्जेत् क्वचिदपि बहिर्नान्तरेणात्मदृष्टिः**
**कामांस्तांस्तानथ च भजते निर्विशङ्को नृसिंहः ॥ ७० ॥**

**नासज्जेत्** नाशक्तो भवति । कः ? **नृसिंहो** योगी । **क्वचिदपि** कुत्रापि । **बहिः** बहिर्विषये । **नान्तरेण** ग्राहकचित्तेन । किं कृत्वा ? **भूत्वा** । कथंभूतः ? **मग्नचित्तः** लीनचेताः । कस्मिन् ? **ध्याने** । कथंभूते ? **ज्ञानामृतजलनिधौ** । पुनः कथंभूते ? **ईदृशे**

एवंभूते । किंकुर्वन् ? **उन्मज्जन्** अवगाहयन् । कथमपि । कया ? **करुणया** । किंकृत्वा ? **वीक्ष्य** [१]अवलोक्य। किं तत्? **विश्वं** जगत्। किंवत् ? **स्वप्नवत्** स्वप्नसदृशम्। **भजते** सेवयति। कान् ? **कामान्** । **तांस्तान्** स्रक्चन्दनवनितादीन् । कथम् ? **अथ च**। कथंभूतः ? **आत्म-दृष्टिः** । कथंभूतः सन् ? **निर्विशङ्कः** सर्वकामादिभोगासक्तिरहितः, अत एव नृसिंहः॥ ७० ॥

**शुद्धा योगाच्चिरतरदृढाभ्यासतः शून्यतायाः**
**ज्ञानावस्था द्व्यधिकदशधा भूमयस्ता भवन्ति ।**
**चेतोवातेन्द्वचलनवशात् सत्सुखस्यानुवृद्धे-**
**र्ब्रूमस्तासां स्फुटमकलुषं लक्षणं सिद्धिदानाम् ॥ ७१ ॥**

शुद्धा भवन्ति । काः ? **भूमयस्ताः** । कथंभूताः ? **ज्ञानावस्थाः** ज्ञानस्थितयः । पुनः कथंभूताः ? **द्व्यधिकदशधा** द्वादश। कस्मात् ? **चिरतरदृढाभ्यासतः** चिरकालशक्ताभ्यासतः। कस्मात् ? **शून्यतायाः** । न केवलं चिरतरदृढाभ्यासतः **श्रद्धायोगात्**। **ब्रूमः** वदिष्यामः। के ? वयम् ? किम् ? **लक्षणं** चिह्नम् । कासाम् ? **तासां** दशभूता(मी)नाम् । कथम् ? **स्फुटं** व्यक्तम् । पुनः कथंभूतम् ? **अकलुषं** रागादिदोषरहितम् । कथंभूतानां तासाम् ? **सिद्धि-दानाम्**। कस्याः ? **अनुवृद्धेः**। कस्य ? **सत्सुखस्य**[२] सहजसुखस्य । कस्मात् ? **चेतोवातेन्द्व-चलनवशात्** चित्तवायुबोधिचित्तस्थिरस्वभावात् ॥ ७१ ॥

**बाह्याबोधस्त्रिविधमनसश्चापि बोधो विचाराद्**
**योऽसावत्र प्रथमतदुदयं ज्ञानभूमिर्गणानाम् ।**
**अस्यामष्टादशशतमरुद्रोधतश्चन्द्ररोधा-**
**च्चण्डाल्यां च प्रमुदितमनाः संविशेच्छून्यतायाम् ॥ ७२ ॥**

**संविशेत्** प्रविशेत्। कः ? योगी। कस्याम् ? **शून्यतायां** शून्यतासमाधौ । कथंभूतः ? **प्रमुदितमनाः** सहजानन्दप्रमुदितचेताः। कस्मात् ? **चन्द्ररोधात्**। कस्याम्। **चण्डाल्यां** मध्यमा-याम्। न केवलं चन्द्ररोधात् **अष्टादशशतमरुद्रोधतश्च** अष्टादशशतवायुरोधात् च। कस्याम् ? चण्डाल्याम्[३] ------।

---

१. नास्ति- क.
२. सत्सुख- अत्रैव ख. मातृकापाठः समाप्तः ।
३. अतः परं टीका नोपलभ्यते ।

एवं चाष्टादशशतमरुत्पञ्चदण्डानुवृत्त्या
संक्रान्तीनां द्व्यधिकदशधा सङ्गि( ङ्गि )तानां निरोधात् ।
मग्नः सौख्ये निवसति सदाऽहर्निशं षष्टिदण्डात्
सम्यक्सिद्धस्तदनु गदितो द्वादशक्ष्मेश्वरः स्यात् ॥ ७३ ॥

एकैकस्याः पुनरिह भुवोऽनेककार्याद् विवृद्धेः
वाक्चित्तर्धैः कति कतिविधं शक्यते वर्णनं तत् ।
एतावत्तत्प्रथमभुवमादाय शक्यं च वक्तुं[1]
+ + + + + + + + + + + + + + + + + + + + + ॥ ७४ ॥

+ + + + + + + + + + + + + + + + + + + + + + +
+ + + + + + + + + + + + पञ्चभिर्वृतः स्यात् ।
स्वार्थोऽप्युक्तः स इह विदुषा यद्दशाहो भवान्तं
सर्वैश्वर्यप्रमुदितमनाः संवसेद् दिव्यमूर्तिः ॥ ८१ ॥

यद्यप्युक्ता विषयवपुरेतस्य लोकस्य सिद्धं
सत्त्वार्थस्य क्वचिदिह तथाप्यस्ति हानिर्न तस्य ।
पूर्वस्माद्यत्प्रणिधिवसत( शंतः ) सत्त्वपुण्यानुभावात्
तन्निर्माणात्सुवशजनिता सर्वथाऽभीष्टसिद्धिः ॥ ८२ ॥

तस्माद्योगेश्वर इह कृपामामुखीकृत्य पूर्वं
पश्चात्कुर्यादमलिनसुखे शून्यताख्ये प्रवेशम् ।
तत्संसारप्रशमगणनादप्रतिष्ठाननिष्ठः
सिद्ध्यत्येवाद्वयसुखतरे वज्रसत्त्वः स एव ॥ ८३ ॥

---

१. अतः परं ८१ श्लोकस्य पूर्वार्द्धं यावन्नोपलब्धम् ।

मन्दाभ्यासाद्यदि न वपुषा साधयेन्मोक्षसौख्यं
कायभ्रान्तिं स्वरसविगमात् सा तथा याथ युक्ता ।
तीव्रक्लेशादथ न परमां मृत्युतो याति मुक्तिं
श्रीमान् श्रेष्ठो भवति मनुजस्तद्भवान्मुच्यतेऽसौ ॥ ८४ ॥

किञ्चिज्ज्ञात्वा स्वमरणमिहारिष्टतो वञ्चयित्वा
प्राणोत्क्रान्तिं तदनु विदधीच्चात्र रिष्टे च मृत्यौ ।
तेनारिष्टं तदुपशमनेऽरिष्टमुत्क्रान्तियोगं
संक्षेपेण स्फुटमभिदधेऽभ्यासमन्दाशयानाम् ॥ ८५ ॥

तत्रारिष्टं वपुषि बहुधा यद्यपि प्रोक्तमास्ते
चन्द्रार्कोत्थं पुनरिह मया ख्यापितव्यं तथापि ।
बाह्येऽप्येतद्विषमपवनात् स्यादरिष्टावधानं
यस्मात् पक्षद्वितयवहनान्नास्त्यरिष्टेऽपि मृत्युः ॥ ८६ ॥

मूलाम्भोजे रविदलयुते द्विद्विमासानुवृद्ध्या
पूर्वे पत्रे त्रिदिनवहनात् तद्दलाशेषशोषात् ।
वामावर्ते प्रतिदिनगते त्रित्रिचन्द्रानुवृद्ध्या
यावद्रुद्रं दलमुपगतो वायुरर्केन्दुलेखम् ॥ ८७ ॥

एषामायुःक्षयमुपगते नाड्यरिष्टात्ममासै-
र्मासा त्रिंशत्प्रतिदलगतत्रित्रिमासैः स्तुतित्वात् ।
यावद्रुद्रो दल इह ततः सूचकं मासहानेः
शून्यं सूर्ये तदनु च दले द्वे दिने चैकमन्तः ॥ ८८ ॥

सूर्यारिष्टं तदुदितदलैर्नाभिपद्मेऽनुवाहात्
पूर्वं पूर्वे शरदिनमतः पञ्चकैर्वर्द्धमानः ।
यावत् पत्रं व्रजति पवनः पञ्चमं तत्परोऽसा-
वेकेनापि कथमिह दिनेनैति पत्रद्वयं च ॥ ८९ ॥

वह्निस्त्रिंशद्दिनमिह ततः शेषभूतं यदास्ते
भूभृत्पत्रं तदनु च समादाय गच्छेद्दिनेशम् ।
तिथ्यो मासाः ककुभनिवहैरर्कतोऽसंक्रमात् खं
वामे स्थित्वा द्विदिवसगतो याति मध्ये दिनैकम् ॥ ९० ॥

एषां काले क्षणशशिशरत् षट्त्रिदृक्चन्द्रमासा-
नायुःशेषास्तिथिदिगिषवो वह्निनेत्रेन्दुसंख्याः ।
गच्छन्त्येते तदनु दिवसा यत्र जीवान्निवृत्तिः
षष्ठाद्यावत्तदुपशमनं तत्र तत्तद्विधेयम् ॥ ९१ ॥

ज्ञात्वारिष्टं स्तनमतिदृढं जानुना पीडनीयं
दोर्दण्डेनाप्यशिथिलबलाद्येन यात्येष वातः ।
पूर्वोक्तेनाप्यनिलवहलायंत्रणेनावधूत्यां
प्राणावेशांस्त्यजति पवनोऽरिष्टमित्याद्यशेषम् ॥ ९२ ॥

रिष्टे मृत्युः षडधिकनवत्याख्यवर्षादिहार्धं
स्यादब्दैकादशपरिगतान् मानतश्चानिलस्य ।
+ + + कादि क्रमवहनतः सव्यतो वामतो वा
यावद् द्वात्रिंशतः + + + + + + वै दिनानि ॥ ९३ ॥

सद्यः प्राणो नयनदिवसं याति नेत्रे यथावत्
वामे चैको दिनमिह पुनश्चन्द्रसंख्यं यथावत् ।
वेदं सव्यं स खलु दिवसान् वेदसंख्यान् यथावत्
वह्निं वामे तदनु दिवसान् वह्निसंख्यान् यथावत् ॥ ९४ ॥

षट्सव्येऽसौ वहति दिनवशात् + + + +
+ + + + + + + + + + + + + + + + + + + + + + ।
मध्ये द्वात्रिंशतमिति चतुःषष्टिकोर्ध्वं यथावत्
वामेऽग्निस्त्रिंशतमिति शिखि त्रिंशतं वै यथावत् ॥ ९५ ॥

एकत्रिंशद्दिवसवहनात् सत्त्वधातुक्षयः स्यात्
तद् द्वात्रिंशद्दिनगतिवशात् स्याद्रजोधातुहानिः ।
वह्नित्रिंशद्दिनवहनतस्तूत्तमो धातुनाशा-
द्वेदत्रिंशद्दिवसवहनं स्याच्छताब्दात् त्र्यहोनात् ॥ ९६ ॥

एकं मध्ये त्रिदिनमिह तच्चैकमेवात्र वामे
वह्निस्त्रिंशद्दिनमिति मरुद्याति सव्ये दिनैकम् ।
त्रेधा पक्षे त्रिविधशतधा पूरकं तत्त्रिवारं
प्राणैः पक्षद्वयमिति गृहीत्वाऽवधूत्यैव याति ॥ ९७ ॥

इत्थं ज्ञात्वा मरणमथवा दुर्निवारो ह्यरिष्टं
प्राणोत्क्रान्तिस्तदिह स्वधिया संविधेया विधानात् ।
शून्यज्ञानं मरणमवगम्यादयः शुद्धमाया-
युक्तः स्कन्धोज्झितगतिरपि स्याज्जनः किन्त्वकीर्तिः ॥ ९८ ॥

बद्ध्वा पद्मासनमथ रतो वायुमाकृष्य गाढं
दत्त्वा हस्तद्वितयमरुतो घ्राणवक्त्रे पिधाय ।
दोर्दण्डाभ्यां स्तनयुगलके पीडिते मध्यवाहात्
गाढाकर्षादुपरि पुनरुत्क्राम्यति प्राणवातः ॥ ९९ ॥

गुह्याद्गुह्यं कथितमभितोऽध्यात्मसारं यदेतत्
सिद्धाम्नायं झटिति फलदं चाभिषिक्ताय देयम् ।
निर्गर्वाय स्वतनुधनभार्यादिसर्वस्वहात्रे
संविग्नाय स्वपरमरणादर्थिने साधकाय ॥ १०० ॥

अध्यात्मसारसकलं स्वमिदं विधाय
श्रीमान् प्रभाकरबुधः कृपयाऽवधूतः ।
यल्लब्धवानभिमतं कुशलं विशालं
तेनाविनष्टवपुषा सुखितोऽस्तु लोकः ॥

अध्यात्मसारसर्वस्वशतके ये विपश्चितः ।
तेषां चरणपद्मानि सेवध्वं हे मुमुक्षवः ॥

अध्यात्मसारशतकं समाप्तम् ।

कृतिरियं प्रभाकरगुप्तपादानाम् ॥

●

## རྩོམ་གྱི་ངོ་སྤྲོད་མདོར་བསྡུས།

### དཔལ་མཱ་ཏྲི་ཙེ་ཊས་མཛད་པའི་བསྔགས་པར་འོས་པ་སངས་རྒྱས་ཀྱི་བསྟོད་པ། ༡ - ༦

ཏྣིའི་དུས་དེབ་འདོན་ཐེངས་ཉེར་གཅིག་པའི་ནང་དཔལ་མཱ་ཏྲི་ཙེ་ཊས་མཛད་པའི་བསྔགས་པར་འོས་པ་སངས་རྒྱས་ཀྱི་བསྟོད་པ་ལས་བསྟོད་པ་གཉིས་རེ་དུས་དེབ་འདོན་ཐེངས་རེ་རེ་ནང་འཁོད་རྒྱུའི་བརྡ་ལན་ཕུལ་ཡོད། གོ་རིམ་དེ་བཞིན་འདོན་ཐེངས་འདི་ནང་བསྟོད་པ་གསུམ་པ་དང་བཞི་པ་དཔར་འདེབས་ཞུས་ཡོད། དེའི་ནང་རྒྱ་བར་མ་ཚང་བའི་ཆ་ཤས་རྣམས་གང་ཐུབ་བོད་བསྒྱུར་ནས་ལེགས་སྦྱར་ནང་གཟུགས་སྒྱུར་ཐོག [ ] ཤད་གུག་ནང་བཞག་ཡོད།

### ཆེས་དཀོན་དཔེ་དེབ་ཁག་གི་ངོ་སྤྲོད། ༧ - ༢༢

དུས་དེབ་འདོན་ཐེངས་འདིའི་ནང་གསལ་འཁོད་དཔེ་དེབ་ཁག་གི་ངོ་སྤྲོད་ཞུས་ཡོད།

༡ སྨོན་ལམ་སྦྱོང་གི་རྒྱུད།

༢ སྨོན་ལམ་སྦྱོང་གི་མཚན་འགྲེལ།

༣ དོན་ཡོད་ཞགས་པའི་སྙིང་པོ་ཞེས་བྱ་བ་ཐེག་པ་ཆེན་པོའི་མདོ།

༤ རྡོ་རྗེ་ཕག་མོའི་ཞལ་རྒྱུན།

༥ ནང་པའི་བྱ་བ་བཅུའི་སྒྲུབ་ཐབས། ཚོགས་རྒྱུད་དང་བྱ་བ་བཅས།

༦ གཞན་གྱི་མི་ཐུབ་པའི་རྟོག་པ།

༧ སྒྲོལ་ཆོག་རྒྱུན་ཁྱེར།

## དུས་ཀྱི་འཁོར་ལོའི་དཀྱིལ་འཁོར་དང་དཀྱིལ་འཁོར་ལ་གནས་པའི་ལྷ་འཁོར། ༣༣ - ༣༨

ནང་པའི་རྒྱུད་ཀྱི་དཀྱིལ་འཁོར་ནང་དུས་ཀྱི་འཁོར་ལོའི་དཀྱིལ་འཁོར་དང་དེའི་ནང་བཞུགས་ལྷ་འཁོར་ནི་ཕལ་ཆེར་རྒྱུད་གཞན་གྱི་དཀྱིལ་འཁོར་ཡོངས་ལས་རྒྱས་པ་དང་རྒྱ་ཆེ་བ་ཡིན། དུས་ཀྱི་འཁོར་ལོའི་དཀྱིལ་འཁོར་ནི་ལུས། ངག ཡིད། བདེ་བ་ཆེན་པོ་དང་པདྨའི་དབུས་ཀྱི་དཀྱིལ་འཁོར་བཅས་ནང་དབྱེ་ཡོད། དཀྱིལ་འཁོར་ལྟ་པོ་དེར་གྲངས་ལས་འདས་པའི་ལྷའི་འཁོར་རྣམས་བཞུགས་ཡོད། སྐབས་འདིའི་གསལ་བཤད་ནང་སློབ་དཔོན་འཇིགས་མེད་འབྱུང་གནས་སྦས་པས་མཛད་པའི་དུས་ཀྱི་འཁོར་ལོའི་དཀྱིལ་འཁོར་དང་དུས་ཀྱི་འཁོར་ལོའི་འགྲེལ་ཆེན་དྲི་མེད་འོད་གཞིར་བཞག་ནས་དཀྱིལ་འཁོར་ལ་གནས་པའི་ལྷའི་གཙོ་བོ་དང་གཙོ་མོའི་ངོ་བོ་ཇི་ལྟར་ཐོབ་པ་ལྟར་གསལ་བཤད་ཞུས་ཡོད།

## དབང་གི་དགོས་མཁོ། ༣༩ - ༤༦

སྤྱིར་དབང་ཞེས་པའི་དོན་ནི་ལས་གང་ཡང་རུང་བ་བྱེད་ཆོག་པའི་དབང་ཆ་ཐོབ་པ་ལ་ཟེར་ཞིང་། དབང་ཐོབ་རྗེས་རྒྱུད་ལ་འཇུག་པ་དང་རྒྱུད་ཀྱི་བསླབ་པ་སློབ་གཉེར་དང་དེ་བཞིན་སྒྲུབ་པ་བྱེད་ཆོག་པའི་དབང་ཐོབ་པ་ཡིན། དབང་གི་ཐུན་མོང་མ་ཡིན་པའི་དོན་ནི་རང་གི་ལུས་ངག་ཡིད་གསུམ་ལ་གནས་པའི་བདེ་བ་ཆེན་པོའི་ཡེ་ཤེས་རྟོགས་པར་བྱ་བའམ། ཟུང་འཇུག་གི་སྐུ་སྒྲུབ་པ་ལ་དབང་བར་བྱེད་པ་ཡིན། སྐབས་འདིར་སྔོམ་པ་དང་དབང་གི་ཁྱད་པར་ཙང་ཟད་གསལ་བཤད་ཞུ་བའི་སྒོ་ནས་དབང་ཐོབ་པའི་དོན་གང་ཡིན་གསལ་བཤད་ཞུས་ཡོད།

## ཆེས་དཀོན་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ། ༨༩ - ༩༣

འགོ་བརྗོད་འདིའི་འོག་དུས་དེབ་འདོན་ཐེངས་ཉེར་གཅིག་པའི་ནང་གལ་ཆེ་གསུང་རབ་ལག་བྲིས་མ་དྲུག་བཅུ་རེ་བརྒྱད་ཀྱི་སྙོར་འཁོད་ཡོད། དུས་དེབ་འདོན་ཐེངས་འདིའི་ནང་གཞན་ཡང་ནང་པའི་གཟུངས་ཀྱི་གཞུང་དྲུག་ཅུ་རེ་གསུམ་གྱི་གནས་ཚུལ་བཀོད་ཡོད།

## ན་རོ་པའི་མཆོག་གི་གདམ་མོའི་རྣལ་འབྱོར། ༩༨ - ༡༠༠

དྷིའི་དུས་དེབ་འདོན་ཐེངས་སྔོན་མའི་ནང་ན་རོ་པའི་རྣལ་འབྱོར་དྲུག་གི་སྒྲུབ་ཐབས་སྤྱིར་ངོ་སྤྲོད་ཞུས་ཡོད། དུས་དེབ་འདོན་ཐེངས་འདིར་ན་རོ་པའི་མཆོག་གི་གདམ་མོའི་རྣལ་འབྱོར་ཆོས་དྲུག་བསྡུས་པའི་ཟིན་བྲིས་ཏིཏྷིའི་ཐོག་བསྒྱུར་ནས་འདིར་བཀོད་ཡོད། འདི་ནི་ཆེས་དཀོན་པའི་རྒྱུད་གཞུང་ཞིག་ཡིན། དེ་བས་ན་སྤྱི་ལ་ཕན་པའི་དམིགས་ཡུལ་བཟུང་ནས་སྒྲུར་འབུལ་ཞུས། མདོར་ན། འཇིག་རྟེན་ལས་འདས་པའི་གདམ་མོའི་ནུས་པ་སྤྱི་གཙུག་འཁོར་ལོར་ཉམས་སུ་མྱོང་ས་དེ་རྡོ་རྗེ་འཆང་གི་ངོ་བོར་མཚོན་པ་བྱེད་ཅིང་། སྒྲུབ་ཐབས་འདི་ལ་བརྟེན་ནས་སྒྲུབ་པ་པོའི་ཐིག་ལེའི་ནུས་པ་འཛིན་པ་ལ་བརྟེན་ནས་རླུང་གི་ནུས་པ་དང་སྦྱར་སྐབས་དོན་དམ་པའི་རང་བཞིན་གྱི་ཕྱག་རྒྱ་ཆེན་པོ་རྟོགས་པར་བྱེད་ཅིང་། དེ་ནི་རྡོ་རྗེ་འཆང་ངམ་སངས་རྒྱས་ཀྱི་གནས་སྐབས་཯ང་ཡིན་ནོ། །

## དུས་ཀྱི་འཁོར་ལོ་དྲི་མེད་འོད་ལ་དཔྱད་པ། ༡༠༡ - ༡༣༣

དུས་ཀྱི་འཁོར་ལོའི་རྒྱུད་ཀྱི་ངོ་སྤྲོད་མདོར་བསྡུས་དྷིའི་དུས་དེབ་འདོན་ཐེངས་བདུན་པའི་ཤོག་གྲངས་ ༦༡ - ༦༣ བར་བཀོད་ཟིན། དེ་བར་དུས་ཀྱི་འཁོར་ལོའི་

རྩ་བ་དང་འགྲེལ་པ་དྲི་མེད་འོད་ཀྱི་ལེའུ་དང་པོ་དང་གཉིས་པ་ཙམ་དཔར་བསྐྲུན་ཞུས་ཡོད། ད་ལྟའི་ཆར་གཞུང་འདིའི་འགྲེལ་པ་དང་ཁ་སྐོང་བཅས་སྡེ་ཚན་གསུམ་དུ་ཆ་ཚང་བ་དཔར་བསྐྲུན་ཞུས་ཟིན་ཡོད་པ་དེའི་དཔྱད་པ་མདོར་བསྡུས་ཤིག་འདིར་བཀོད་ཡོད།

## ནང་དོན་སྙིང་པོ་བརྒྱ་པ་དང་དེའི་འགྲེལ་པ། ༡༣༣ - ༡༨༨

ནང་དོན་སྙིང་པོ་བརྒྱ་པར་སློབ་དཔོན་འོད་གསལ་འབྱུང་གནས་སྦས་པས་འཕོ་བའི་རྣལ་འབྱོར་གང་ཡིན་དང་དེའི་སྒྲུབ་ཐབས་ཇི་ལྟར་བགྱིས་པ་སོགས་གདན་འཕེབས་བྱས་ཡོད། ཁོང་གི་གསུངས་དོན་ལྟར་ན་སྒྲུབ་ཐབས་འདིས་སྲོག་གི་རླུང་ལ་དབང་བར་བྱས་ནས་དུས་ནམ་འདོད་ལ་འཕོ་བར་བྱེད་ནུས། དེ་ལ་ཕྱོགས་གཞན་ནས་འདོད་པའི་འཆི་བ་ཡང་བརྗོད་ཆོག

གཞུང་འདིའི་འདྲ་བཤུས་གཉིས་བལ་ཡུལ་རྒྱལ་ཡོངས་འགྲེམས་སྟོན་ཁང་ནས་ཐོབ་ཡོད། དེ་ལ་མཁས་དབང་ཤྲཱི་ར་མ་ཧེས་མཛད་པའི་འགྲེལ་པ་ཡང་ཡོད། དེ་གཉིས་ཤོག ༧༩ བར་རྩ་བ་དང་། ཚིགས་བཅད་ ༧༣ བར་འགྲེལ་པ་ཡིན། དཀྱིལ་ལ་ཚིགས་བཅད་ ༨༣ དང་། ༨༩ ཆད་ཡོད། ཀྱཱ་ཁོ་ཡོ་གཙུག་ལག་དཔེ་མཛོད་ཁང་ནས་ལག་བྲིས་ཨང་གྲངས་ ༣༩༠ III ནང་ཤོག་གྲངས་གསུམ་ཐོབ་ཀྱི་ཡོད། དེ་ནང་ཚིགས་བཅད་ ༤༡ ནས་ ༡༠༣ བར་རྩ་བའི་ཆ་ཡིན། དེ་ལྟར་འདིའི་ཤོག་བརྒྱད་ཙམ་ད་ལྟ་མ་ཐོབ་པར་ལུས་ཡོད། འགྲེལ་པ་འདི་དྲི་བས་མཚམས་སྦྱར་བའི་འབྲུ་འགྲེལ་ཙམ་དུ་མཆིས། འོན་ཀྱང་མཁས་དབང་ཞིག་གི་འབད་བརྩོན་ཆུད་ཟོས་སུ་མ་འགྲོ་བའི་སླད་འགྲེལ་པ་གང་ཐོབ་མཉམ་དུ་བཀོད་ཡོད།

•

## ABSTRACT OF ARTICLES

*Varṇārhavarṇa-stotra of Mātṛceṭa* *1-6*

We announced in the twenty first issue of this *Review* to introduce two hymns of the *Varṇārhavarṇa Buddha-stotra* in each consecutive issue. It is in this order that we reproduce the 3-4 hymns of this work. Attempt has been made to give the Sanskrit translation of the inextant original portions with the help of Tibetan text. These emendations are put in brackets.

*Introduction to Rare Buddhist Texts* *7-22*

We introduce under this title seven works of esoteric nature, viz. :

1. *Saṁvarodaya-tantram*
2. *Saṁvarodaya-ṭippaṇī*
3. *Amoghapāśahṛdayam-nāma-mahāyāna-sūtram*
4. *Vajravārāhī mukhākhyānam*
5. *Bauddhadaśakriyāsādhanam-Gaṇatantra-Kriyā Ca*
6. *Aparājitākalpaḥ*
7. *Tāriṇī Nityārcana-vidhiḥ*

*Kālacakra-Maṇḍala and the Divinity Circle* *23-38*

Among the esoteric circles of the Buddhist tantric texts the maṇḍala of *Kālacakratantra* and its divine auriole is probably the widest and largest. The Kālacakra maṇḍala is classified into Kāya, Vāk, Citta (The Body, Speech and Mind), Mahāsukha (The Great Bliss) and Padmakarṇikā (The Lotus Petal) maṇḍalas. The five maṇḍalas abound in countless divine figures.

The narrative lays down the conceptual forms of the principal gods and goddesses of the specific maṇḍalas as conceived by Abhayākaragupta, the Ācarya who wrote the *Kālacakramaṇḍala* and the *Kālacakra-tantra-ṭīkā Vimalaprabhā*.

*The Purpose of Abhiṣeka* *39-46*

Abhiṣeka means entitlement which invests one with the right of admission into tantric discipline after which he freely studies the texts and

is eligible for tantra practices. It unfolds the wisdom of the great bliss of vajra-jñāna as lies within the triology of body, speech and mind. It endows one with the integrated personality (Yuganaddha-Svarūpa).

In this context "Initiation" and "Abhiṣeka" are clearly demarcated and the purpose of Abhiṣeka closely elucidated.

*Basic Material of Rare Texts* *47-73*

In the twenty-first issue of the *Review* 68 important *mss*. had been reported. We inform about 63 *mss.* of Buddhist *Dhāraṇīs* in this issue which correspond with the numerous other esoteric works.

*Naropa's Highest Cāṇḍālī Yoga* *74-100*

Modalities of six yoga practices of Siddha Naropa occur in the previous issues of the *Review*. We here publish the highest Cāṇḍāli Yoga of Naropa as described in the Tibetan text Cos-drug-bsdus pahi-zin bris. We have here a Hindi version of the rare ms. It is reproduced for acquisition of merit.

Cāṇḍālī as ennervating essence in the Uṣṇīṣa cakra is held sacred as the primordial vajradhara. The practice of this yoga leads the semen to combine with the vital energy and culminate into the experience of *Mahāmudrā* the symbol of benevolence. This is the Buddha experience.

*Review of Kālacakra Tantra-Vimalaprabhā Commentary* *101-122*

We introduced the *Kālacakra-Tantra* in the seventh issue of *Dhīḥ* (q.v. pp. 91-93). By the time the work had been published only in its original form with two cantos of the first volume of its *Vimalaprabhā* Commentary.

The institute has published this important work along with the above commentary and a few appendices. A brief review is given here.

*Adhyātma-sāraśataka and its Ṭīkā* *123-166*

The *Adhyātma-sāra śataka* is a work of Ācārya Prabhākaragupta which describes the Release Yoga (Utkrānti-yoga) and its practices. The Ācārya ascribes skill of sublimating the vital breath which becomes so acute as to release the final breath at will. This we may call "The way to die at will".

Two copies of this text were obtained from the National Archive of Kathmandu. The texts also have a commentary.

The texts consist of 74 verses in original of which commentaries are found upto 72 verses only. Verses nos. 63-64 are missing. The University of Tokyo Library (Mss. Section) has folios (no. 340-III) bearing verse nos. 81-102.

•

